# …श्रममुद्रणालयस्थग्रन्थानां सूचीपत्रम् ।

| | मूल्यम् । रू० | आ० |
|---|---|---|
| …म्—सभाष्यम् । ... ... ... | ० | ६ |
| …णाचार्यभट्टभास्करप्रणीतभाष्याभ्यां संवलितः। | १ | ६ |
| …णभाष्योपेतम् । ... ... ... | ० | ४ |
| ४ यागरत्नाकरः—वैद्यकशास्त्रीयग्रन्थोऽतीव पुरातनः । ... | ५ | ० |
| ५ ईशावास्योपनिषत्—सटीकशांकरभाष्याद्युपेता । ... | ० | १४ |
| ६ केनोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | १ | ० |
| ७ काठकोपनिषत्—टीकाद्वयसहितशांकरभाष्योपेता । ... | १ | ४ |
| ८ प्रश्नोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | १ | ० |
| ९ मुण्डकोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | ० | १० |
| १० माण्डूक्योपनिषत्-सटीकशांकरभाष्यगौडपादीयकारिकाद्युपेता। | २ | ५ |
| ११ ऐतरेयोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... | १ | ४ |
| १२ तैत्तिरीयोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... | १ | १२ |
| १३ तैत्तिरीयोपनिषद्भाष्यवार्तिकम्—सुरेश्वराचार्यकृतं सटीकम् । | २ | २ |
| १४ छान्दोग्योपनिषत्—सटीकशांकरभाष्योपेता । ... ... | ५ | ० |
| १५ बृहदारण्यकोपनिषत्—सटीकशांकरभाष्योपेता । ... | ८ | ० |
| १६ बृहदारण्यकोपनिषद्भाष्यवार्तिकम्—भागत्रयात्मकम् । | २२ | ८ |
| १७ श्वेताश्वतरोपनिषत्—भाष्यदीपिकाद्युपेता । ... ... | २ | ४ |
| १८ सौरपुराणम्—श्रीमद्द्वैपायनप्रणीतम् । उपपुराणम् । ... | ३ | ० |
| १९ रसरत्नसमुच्चयः—श्रीमद्वाग्भटाचार्यविरचितः। वैद्यकग्रन्थः। | ३ | १२ |
| २० जीवन्मुक्तिविवेकः—विद्यारण्यविरचितः सटीकः । ... | ३ | १२ |
| २१ ब्रह्मसूत्राणि—सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि । | १२ | ० |
| २२ श्रीमच्छंकरदिग्विजयः-विद्यारण्यकृतः। टीकाटिप्पणीभ्यां सहितः। | ६ | ० |
| २३ वैयासकन्यायमालाविस्तरः-भारतीतीर्थमुनिप्रणीतः । ... | १ | १२ |
| २४ जैमिनीयन्यायमालाविस्तरः—श्रीमाधवप्रणीतः । ... | ८ | ० |
| २५ सूतसंहिता—माधवकृतटीकोपेता । भागत्रयात्मिका । ... | ११ | ८ |
| २६ हस्त्यायुर्वेदः—पालकाप्यमुनिविरचितः । ... ... | ७ | ६ |
| २७ वृन्दमाधवः—श्रीमद्वृन्दप्रणीतः । सटीकः । वैद्यकग्रन्थः । | ६ | १२ |
| २८ ब्रह्मपुराणम्—श्रीमद्व्यासविरचितम् । प्रथमं महापुराणम् । | ६ | ४ |
| २९ उपनिषदां समुच्चयः-श्रीनारायणशंकरानन्दकृतदीपिकासहितः। | ६ | १२ |
| ३० नृसिंहपूर्वोत्तरतापनीयोपनिषत्—भाष्याद्युपेता । ... | १ | १२ |

| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । ... | २ | ८ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः-सटीकाः | २ | ८ |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | १२ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | १ | ४ |
| ६६ काव्यप्रकाशः—उद्द्योतयुतप्रदीपसहितः । ... | ६ | ४ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि । ... ... | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । ... ... | १ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । ... | १ | ४ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । ... ... | १ | १० |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० | १२ |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । ... | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता ।... | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । ... | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता । ... | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः । | १ | ० |
| ७७ वेदान्तसूत्रमुक्तावालिः—ब्रह्मानन्दसरस्वतीविरचिता । ... | २ | ६ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः । ... ... | ३ | १२ |
| ७९ छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता । ... | २ | ९ |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । ... | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । ... | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । ... ... | २ | ७ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम् । ... | ९ | १ |
| ८४ अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । ... | २ | ० |
| ८५ ज्योतिर्निबन्धः—शूरस[illegible]ठश्रीशिवराजविरचितः । ... | ३ | १[illegible] |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । ... ... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिकृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | १६ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... ... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्-ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि-भाष्यवृत्तिभ्यां समेतानि । ... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । | ६ | १२ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १५

# बृहदारण्यकोपनिषत् ।

आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

एतत्पुस्तकं
वे० शा० रा० रा० "काशीनाथ शास्त्री आगाशे"
इत्येतैः संशोधितम् ।



तच्च
बी ए. इत्युपपदधारिभिः ।
विनायक गणेश आपटे
इत्येतैः

पुण्याख्यपत्तने
श्रीमन् 'महादेव चिमणाजी आपटे' इत्यभिधेय-
महाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।

चतुर्थीयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८६१ ।
खिस्ताब्दाः १९३९ ।



मूल्यं रूपकाष्टकम् (८) ।

## आदर्शपुस्तकोल्लेखपत्रिका ।

अथैतस्याः सटीकशांकरभाष्यसमेताया बृहदारण्यकोपनिषदः पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते ।

( क. ) इति संज्ञितम्-मूलं सटीकभाष्योपेतं कलिकातानगरस्थमुद्रणालये मुद्रितं कैलासवासिनां 'देव' इत्युपाह्वानां पुण्यपत्तननिवासिनां वे० शा० रा० रा० बालशास्त्रिणाम् । पृष्ठानां संख्या १०९६ । एकपृष्ठस्थपङ्क्तिसंख्या २४ । एकपङ्क्तिस्थानामक्षराणां संख्या २३ ।

( ख. ) इति संज्ञितम्-मूलं सटीकभाष्योपेतं, वडलीग्रामनिवासिनां चिदम्बरदीक्षितकुलोत्पन्नानां श्री० वे० शा० रा० रा० मार्तण्डदीक्षितानाम् । पत्राणि ३०९ । पङ्क्तयः २३ । अक्षराणि ५० । लेखनकालः शके १७८३ ।

( ग. ) इति संज्ञितम्-मूलं केवलभाष्यसमेतं, इन्दूरपुरनिवासिनां "किबे" इत्युपाह्वानां श्री० रा० रा० "भाऊसाहेब बाळासाहेब" इत्येतेषाम् । पत्राणि १२६ । पङ्क्तयः १९ । अक्षराणि ५६ । लेखनकालः पञ्चाशत्संवत्सरमित इत्यनुमीयते ।

( घ. ) इति संज्ञितम्-मूलं सटीकभाष्योपेतं, बडोदरनगरनिवासिनां पटवर्धनोपाह्वानां श्री० रा० रा० "कृष्णराव भीमाशंकर" इत्येतेषाम् । पत्राणि ३५९ । पङ्क्तयः १८ । अक्षराणि ५० । लेखनकालस्तु शतसंवत्सरमित इत्यनुमीयते ।

( ङ. ) इति संज्ञितम्-मूलं सभाष्यं टीकारहितं, पुण्यपत्तननिवासिनां कै० श्री० रा० रा० "बाळासाहेब पटवर्धन" इत्येतेषाम् । पत्राणि ३५७ । पङ्क्तयः १० । अक्षराणि ३८ । लेखनकालः पादोनशतसंवत्सरमित इत्यनुमीयते ।

( च. ) इति संज्ञितम्—मूलं सभाष्यं टीकारहितम्, अष्टेग्रामनिवासिनां लिमये इत्युपनामकानां रा० रा० "गोविन्दराव" इत्येतेषाम् । पत्राणि २४२ । पङ्क्तयः १३ । अक्षराणि ५० । लेखनकालस्त्वनुमानेन षष्टि-वर्षात्मकः ।

( छ. ) इति संज्ञितम्—मूलं सभाष्यं केवलान्तिमाध्यायद्वयटीकोपेतम्, उज्जयिनीक्षेत्रनिवासिनां वे० शा० सं० रा० रा० " सोरटीबुवा " इत्येतेषाम् । पत्राणि २६० । पङ्क्तयः १४ । अक्षराणि ४२ । लेखनकालः पञ्चविंशतिसंवत्सरात्मक इत्यनुमीयते ।

( ज. ) इति संज्ञितम्—मूलं सभाष्यं टीकारहितं, पुण्यपत्तननिवासिनां फडर्णीस इत्युपनामकानां कै० रा० रा० "मोरोबादादा" इत्याख्यानाम् । पत्राणि २५९ । पङ्क्तयः १५ । अक्षराणि ४८ । लेखनकालस्त्वनुमानेन शतसंवत्सरमितो दृश्यते ।

( झ. ) इति संज्ञितम्—केवलभाष्यं, कै० रा० रा० "मोरोबादादा फडणीस" इत्येतेषाम् । पत्राणि २११ । पङ्क्तयः १२ । अक्षराणि ४८ । अस्यापि लेखनकालः पादोनशतसंवत्सरमित इत्यनुमीयते ।

( ञ. ) इति संज्ञितम्—केवलटीका, कै० रा० रा० "मोरोबादादा फडणीस " इत्येतेषाम् । पत्राणि ३१४ । पङ्क्तयः १२ । अक्षराणि ४५ । लेखनकालः शतसंवत्सरमित इत्यनुमीयते ।

( ट. ) इति संज्ञितम्—केवलमूलं, रा० रा० "भाऊसाहब नगरकर" इत्येतेषाम् । पत्राणि ६४ । पङ्क्तयः ९ । अक्षराणि ३६ । लेखनकालः पञ्चाशत्संवत्सरमित इत्यनुमीयते ।

( ठ. ) इति संज्ञितम्—केवलं मूलं, पुरंदरे इत्युपाह्वानां श्री० रा० रा० " अप्पासाहेब " इत्येतेषाम् । पत्राणि ७० । पङ्क्तयः ८ । अक्षराणि २९ । लेखनकालस्त्वनुमानेन पञ्चविंशतिवत्सरात्मको वर्तते ।

( ड. ) इति संज्ञितम्——केवलं मूलं, सुरतग्रामवासिनां करंबेळकर इत्युपनामकानां रा० रा० "हरि बाबाजी" इत्येतेषाम् । पत्राणि १३६ । पङ्क्तयः ६ । अक्षराणि २६ । लेखनकालोऽनुमानेन षष्टिवर्षात्मकः ।

( ढ. ) इति संज्ञितम्——मूलं सटीकभाष्योपेतं, पुण्यपत्तननिवासिनां परचुरे इत्युपनामकानां रा० रा० "आबाजी रामचन्द्र" इत्येतेषाम् । पत्राणि ६३७ । पङ्क्तयः १५ । अक्षराणि ३५ । लेखनकालस्त्वनुमानेन पादोनशतवत्सरात्मकः । टीकालेखनकालस्तु शके १७६८ ।

( ण. ) इति संज्ञितम्——केवला टीका, रा० रा० " भाऊसाहेब नगरकर " इत्येतेषाम् । पत्राणि ४३३ । पङ्क्यः ९ । अक्षराणि ४० । लेखनकालोऽनमानेन पञ्चाशद्वत्सरात्मकः ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।





ॐ तत्सद्ब्रह्मणे नमः ।

# बृहदारण्यकोपनिषत् ।

## आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

( अथ श्रीमच्छंकरभगवत्पादविरचितं भाष्यम् ) ।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः ।

( अथाऽऽनन्दगिरिकृता बृहदारण्यकभाष्यटीका ) ।

यदविद्यावशाद्विश्वं दृश्यते रशनाहिवत् ।
यद्विद्यया च तद्धानिस्तं वन्दे पुरुषोत्तमम् ॥ १ ॥
नमस्त्रय्यन्तसंदोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥
भगवत्पादपादाब्जद्वंद्वं द्वंद्वनिबर्हणम् ।
सुरेश्वरादिसद्भृङ्गैरवलम्बितमाभजे ॥ ३ ॥
बृहदारण्यके भाष्ये शिष्योपकृतिसिद्धये ।
सुरेश्वरोक्तिमाश्रित्य क्रियते न्यायनिर्णयः ॥ ४ ॥

काण्वोपनिषद्विवरणव्याजेनाशेषामेवोपनिषदं शोधयितुकामो भगवान्भाष्यकारो विघ्नोपशमादिसमर्थं शिष्टाचारप्रमाणकं परापरगुरुनमस्काररूपं मङ्गलमाचरति—नमो ब्रह्मादिभ्य इति । वेदो हिरण्यगर्भो वा ब्रह्म तन्नमस्कारेण सर्वा देवता नमस्कृता भवन्ति तदर्थत्वात्तदात्मकत्वाच्च । 'एष उ ह्येव सर्वे देवाः' इति श्रुतेः । आदिपदेन परमेष्ठिप्रभृतयो गृह्यन्ते । यद्यपि तेषामुक्तो ब्रह्मान्तर्भावस्तथाऽपि तेष्वनादरनिरासार्थं पृथग्ग्रहणम् । चतुर्थी नमोयोगे । नमःशब्दार्थश्चित्तविषयप्रह्वीभावविषयः । ननु ब्रह्मविद्यां वक्तुकामेन किमित्येते नमस्क्रियन्ते सैव हि वक्तव्येत्यत आह—ब्रह्मविद्येति । एतेषां तत्संप्रदायकर्तृत्वे वंशब्राह्मणं प्रमाणयति—वंशऋषिभ्य इति । यद्यपि तत्र पौतिमाष्यादयो ब्रह्मान्ताः संप्रदायकर्तारः श्रूयन्ते तथाऽपि गुरुशिष्यक्रमेण ब्रह्मणः प्राथम्यमिति तदादित्वमिति भावः । संप्रत्यपरगुरून्नमस्करोति—नमो गुरुभ्य इति ।

---

१ ग. घ. च. छ. °र्षिभ्यो । २ क. रसना° । ३ घ. °ति । ॐ न° । ४ घ. °र्षिभ्य ।

यद्यपि ब्रह्मविद्यासंप्रदायकर्त्रन्तर्भावादेते प्रागेव नमस्कृतास्तथाऽपि शिष्याणां गुरुविषयादरातिरेककार्यार्थं पृथग्गुरुनमस्करणम् । 'यस्य देवे परा भक्तिः' इत्यादिश्रुतेरिति ।

"उषा वा अश्वस्य" इत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत् । तस्या इयमल्पग्रन्था वृत्तिरारभ्यते संसार[1]व्याविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये ।

यदुद्दिश्य मङ्गलमाचरितं तत्प्रतिज्ञातुं प्रतीकमादत्ते—उषा वा इति । एतेन चिकीर्षिताया वृत्तेर्भर्तृप्रपञ्चभाष्येणागतार्थत्वमुक्तम् । तद्धि द्वया हेत्यादिमाध्यंदिनश्रुतिमधिकृत्य प्रवृत्तम् । इयं पुनः 'उषा वा अश्वस्य' इत्यादिकाण्वश्रुतिमाश्रित्येति । अथोद्देश्यं निर्दिशति—तस्या इति । भर्तृप्रपञ्चभाष्याद्विशेषान्तरमाह—अल्पग्रन्थेति । अस्या ग्रन्थतोऽल्पत्वेऽपि नार्थतस्तथात्वमिति ग्रन्थस्य ग्रहणम् । वृत्तिशब्दो भाष्यविषयः । सूत्रानुकारिभिर्वाक्यैः सूत्रार्थस्य स्वपदानां चोपवर्णनस्य भाष्यलक्षणस्यात्र भावादिति । ननु कर्मकाण्डाधिकारिणो विलक्षणोऽधिकारी न ज्ञानकाण्डे संभवति । अर्थित्वादेः साधारणत्वाद्वैराग्यादेश्च दुर्वचनत्वात् । नच निरधिकारं शास्त्रमारम्भमर्हतीत्यत आह—संसारेति । कर्मकाण्डे हि स्वर्गादिकामः संसारपरवशो नरपशुरधिकारी । इह तु संसाराद्व्यावृत्तिमिच्छवो विरक्ताः । नच वैराग्यं दुर्वचं शुद्धबुद्धेर्विवेकिनो ब्रह्मलोकान्ते संसारे तत्संभवात् ।

उक्तं हि—

"शोध्यमानं तु तच्चित्तमीश्वरार्पितकर्मभिः ।
वैराग्यं ब्रह्म[2]लोकादौ व्यन[3]क्त्याशु सुनिर्मलम्" इति ॥

अतो यथोक्तविशिष्टाधिकारिभ्यो वृत्तेरारम्भः संभवतीत्यर्थः । तथाऽपि विषयप्रयोजनसंबन्धानामभावे कथं वृत्तिरारभ्यते तत्राऽऽह—संसारहेत्विति । प्रमातृताप्रमुखः कर्तृत्वादिरनर्थः संसारस्तस्य हेतुरात्माविद्या तन्निवृत्तेः साधनं ब्रह्मात्मैकत्वविद्या तस्याः प्रतिपत्तिरप्रतिबद्धायाः प्राप्तिस्तदर्थं वृत्तिरारभ्यत इति योजना । एतदुक्तं भवति—सनिदानानर्थनिवृत्तिः शास्त्रस्य प्रयोजनम् । ब्रह्मात्मैक्यविद्या तदुपायः । तदैक्यं विषयः । संबन्धो ज्ञानफलयोरुपायोपेयत्वम् । शास्त्रतद्विषययोर्विषयविषयित्वं तदारम्भं शास्त्रमिति ।

सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्य[4]न्तावसादनात् । उपनिपूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते ।

---

१ क. °रतिवि° । २ ज. °लोकं च ज्ञानमेव तु नि° । ३ घ. ण. °नक्यथ सु° । ४ झ. °त्यन्तमव° ।

प्रयोजनादिषु प्रवृत्त्यङ्गतयोक्तेष्वपि सर्वव्यापाराणां प्रयोजनार्थत्वात्तस्य प्राधान्यम् । उक्तं हि—

"सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते" इति ॥

तथा च शास्त्रारम्भौपयिकं प्रयोजनमेव नामव्युत्पादनद्वारा व्युत्पादयति—**सेयमिति** । अध्यात्मशास्त्रेषु प्रसिद्धा संनिहिता चात्र ब्रह्मात्मैक्यविद्या[1] तन्निष्ठानां सर्वकर्मसंन्यासिनां सनिदानस्य संसारस्यात्यन्तनाशकत्वाद्भवत्युपनिषच्छब्दवाच्या । 'उपनिषदं भो ब्रूहि' इत्याद्या च श्रुतिः । तस्मादुपनिषच्छब्दवाच्यत्वप्रसिद्धेर्विद्यायास्ततो यथोक्तफलसिद्धिरित्यर्थः । कथं तस्यास्तच्छब्दवाच्यत्वेऽप्येतावानर्थो[2] लभ्यते तत्राऽऽह— **उपनिपूर्वस्येति** । अस्यार्थः—'षद्लृ विशरणगत्यवसादनेषु' इति स्मर्यते । सदेर्धातोरुपनिपूर्वस्य क्विबन्तस्य सहेतुसंसारनिवर्तकब्रह्मविद्यार्थत्वादुपनिषच्छब्दवाच्या सा भवत्युक्तफलवती । उपशब्दो हि सामीप्यमाह । तच्चापति संकोचके प्रतीचि पर्यवस्यति । निशब्दश्च निश्चयार्थस्तस्मादैकात्म्यं निश्चितं[3] तद्विद्या सहेतुं संसारं सादयतीत्युपनिषदुच्यते । उक्तं हि—'अवसादनार्थस्य चावसादात्' इति । ब्रह्मविद्यैव चेदुपनिषदिष्यते कथं तर्हि ग्रन्थे वृद्धास्तच्छब्दं प्रयुञ्जते न खल्वेकस्य शब्दस्यानेकार्थत्वं न्याय्यमित्याशङ्क्याऽऽह—**तादर्थ्यादिति** । ग्रन्थस्य ब्रह्मविद्याजनकत्वादुपचारात्तत्रोपनिषत्पदमित्यर्थः ।

**सेयं षडध्याय्यरण्येऽनूच्यमानत्वादारण्यकम् । बृहत्त्वात्परिमाणतो बृहदारण्यकम् । तस्यास्य कर्मकाण्डेन संबन्धोऽभिधीयते ।**

यथोक्तविद्याजनकत्वे ग्रन्थस्य किमिति तदध्येतॄणां सर्वेषां विद्या न भवतीत्याशङ्क्य श्रवणादिपराणामेवारण्यानुवचनादिनियमाधीताक्षरेभ्यस्तज्जन्मेति बृहदारण्यकनामनिर्वचनपूर्वकमाह—**सेयमिति**[4] । अथारण्यानुवचनादिनियमाधीतवेदान्तानामपि केषांचिद्विद्यानुपलम्भात्कुतो यथोक्ताक्षरेभ्यस्तदुत्पत्तिरित्यत आह—**बृहत्त्वादिति** । उपनिषदन्तरेभ्यो ग्रन्थपरिमाणातिरेकादस्य बृहत्त्वं प्रसिद्धमर्थतोऽपि[5] तदस्ति ब्रह्मणोऽखण्डैकरसस्यात्र प्रतिपाद्यत्वात्तज्ज्ञानहेतूनां चान्तरङ्गाणां भूयसामिह प्रतिपादनात् । अतो बृहत्त्वादारण्यकत्वाच्च बृहदारण्यकम् । नचैतदशुद्धबुद्धेरधीतमपि विद्यामादधाति । "कषाये कर्मभिः पक्के ततो ज्ञानम्" इति स्मृतेरित्यर्थः । ज्ञानकाण्डस्य विशिष्टाधिकार्यादिवैशिष्ट्येऽपि कर्मकाण्डेन नियतपूर्वापरभावानुपपत्तिलभ्यः संबन्धो वक्तव्यः । स च परीक्षकविप्रतिपत्तेरशक्यो विशेषतो ज्ञातुमित्याशङ्क्याऽऽह - **तस्येति** ।

---

१ क °त्मैकत्ववि° । २ ख. °नर्थ उपल° । ३ घ. ङ. ण. निश्चिन्वता । ४ ख. °ति । बृहदार° । ५ क. ख °पि तस्य त° ।

**सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात् ।**

प्रतिज्ञातं संबन्धं प्रकटयितुमसिद्धप्रमाणभावानां वेदान्तानां संबन्धाभिधानावसराभावात्तत्प्रामाण्यं प्रतिपाद्य पश्चात्तेषां कर्मकाण्डेन संबन्धविशेषवचनमुचितमिति मन्वानस्तत्प्रामाण्यं साधयति— —सर्वोऽपीति । प्रत्यक्षानुमानाभ्यामित्यागमातिरिक्तप्रमाणोपलक्षणार्थम् । एषोऽर्थोऽध्ययनविध्युपात्तः सर्वोऽपि काण्डद्वयात्मको वेदो मानान्तरानधिगतं यदिष्टोपायादि तज्ज्ञापनपरस्तथा चाज्ञातज्ञापकत्वाविशेषात्तुल्यं प्रामाण्यं काण्डयोरिति । अथवा वेदनं वेदोऽनुभवः । स च शब्देतरमानायोग्यो रूपादिहीनत्वात् । 'एतदप्रमेयम्' इति हि श्रुतिः । स चेष्टानिष्टप्राप्तिपरिहारोपायस्तस्यैव तत्तदात्मनाऽवस्थानात् । 'सच्च त्यच्चाभवत्' इत्यादिश्रुतेः । स च प्रकाशनः सर्वप्रकाशकत्वात् । 'तमेव भान्तमनुभाति सर्वम्' इति श्रुतेः । स च परोऽविद्यातत्कार्यातीतत्वात् । 'विरजः पर आकाशात्' इत्यादिश्रुतेः । एवंरूपो वेदपदवेदनीयश्चिदेकरसः प्रत्यग्धातुरेव सर्वोऽपि कार्यकारणात्मकः प्रपञ्चः । 'आत्मैवेदं सर्वम्' इति श्रुतेः । तथा च यथोक्तं वस्तु[१] प्रकाशयन्तो वेदान्ता विधिवाक्यवत्प्रमाणमिति । अथवा प्रत्यक्षादिनाऽनवगतो योऽसाविष्टप्राप्त्याद्युपायो ब्रह्मात्मा तस्य प्रकाशनपरः सर्वोऽप्ययं वेदः । तस्यैवाज्ञातत्वात्तत्र कर्मकाण्डं कर्मानुष्ठानप्रयुक्तबुद्धिशुद्धिद्वारा ब्रह्माधिगतावारादुपकारकम् । 'विविदिषन्ति यज्ञेन' इति श्रुतेः । ज्ञानकाण्डं तु साक्षादेव तत्रोपयुक्तम् । परमपुरुषस्यौपनिषदत्वश्रवणात् । 'सर्वे वेदा यत्पदमामनन्ति' इति च श्रुतेः । तद्युक्तं कर्मकाण्डवज्ज्ञानकाण्डस्यापि प्रामाण्यमिति । अधिकारिसौलभ्यप्रतिपादनद्वारा ज्ञानकाण्डप्रामाण्यमेव स्फुटयति— —सर्वपुरुषाणामिति । अयमर्थः—सुखं मे स्याद्दुःखं मा भूदिति स्वभावतः शास्त्रं विना सर्वेषां पुरुषाणामनवच्छिन्नसुखादिमात्रेऽभिलाषोपलम्भात्तन्मात्रस्य च मोक्षत्वात्तत्कामिनो ज्ञानकाण्डाधिकारिणः सुलभत्वात्तस्मिन्प्रमां स्वार्थविषयामादधत्कथं तदप्रमाणमिति ।

**दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नाऽऽगमान्वेषणा । न चासति जन्मान्तरसंबन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात् । स्वभाववादिदर्शनात् ।**

ननु वेदस्य कार्यपरतया प्रामाण्यात्कर्मकाण्डवत्काण्डान्तरस्यापि कार्यपरतया प्रामाण्यमेष्टव्यमिति नेत्याह—दृष्टविषय इति । क्रियाकारकफलेतिकर्तव्यतानामन्यतस्मिन्का( मे का )र्ये समीहितप्राप्त्याद्युपायभूते व्युत्पत्तिकाले प्रत्यक्षादिसिद्धे तथाविधकार्यविषयोऽन्यथालब्धत्वात्तत्र नाऽऽगमोऽनुसंधेयः । न हि लोकवेदयोस्तद्भिद्यते ।

१ क. °स्तुस्वरूपं प्र° । २ ख. °दिमानान° । ३ झ. °षयत्वे चे° । ४ छ. झ. °स्तज्ञा° ।

अलौकिके तस्मिन्नव्युत्पत्तिप्रसङ्गात्। नचाव्युत्पन्नानि पदानि बोधकान्यतिप्रसङ्गात्। नच ब्रह्मण्यपि तुल्या व्युत्पत्त्यनुपपत्तिः । तस्मिन्ब्रह्मत्वेनाऽऽत्मत्वेन च प्रसिद्धेः । [1]तत्तत्सामान्योपाधौ विज्ञानादिपदानां व्युत्पत्तेः सुकरत्वात् । तानि चालौकिकमखण्डं प्रत्यग्ब्रह्म निर्लु[2]ण्ठितसामान्यविशेषं लक्षणया बोधयन्ति । तस्माद्ब्रह्मैव वेदप्रमाणकं न कार्यमिति भावः । किंच तिष्ठतु वेदान्तप्रामाण्यं कर्मकाण्डेऽपि व्यतिरिक्तात्मास्तित्वादौ सिद्धेऽर्थे प्रामाण्यमावश्यकम् । तदभावे तत्प्रामाण्यायोगात् । न हि भविष्यद्देहसंबन्ध्यात्मसद्भावानधिगमे पारलौकिकप्रवृत्तिविश्रम्भः । तस्मात्कर्मकाण्डप्रामाण्यमिच्छता सिद्धेऽर्थे भविष्यद्देहसंबन्धिन्यात्मनि स्वर्गादौ च तत्प्रामाण्यस्याभ्युपेयत्वात्कार्ये वेदप्रामाण्यानियमाद्वेदान्तानामपि स्वार्थे मानत्वं सिध्यतीत्याह—नचेति । ननु देहान्तरसंबन्ध्यात्मज्ञानं विनाऽपि विधिवशाददृष्टार्थक्रियासु प्रवृत्तिः स्यादिति नेत्याह—स्वभावेति । यदाऽऽत्मा देहान्तरसंबन्धी शास्त्रान्मानान्तराच्च न प्रमितस्तदा भोक्तुरनवगमान्न प्रेक्षापूर्वकारी यागाद्यनुतिष्ठेत् । [3]लोकायतस्य व्यतिरिक्तात्मास्तित्वमजानतो जन्मान्तरेष्टानिष्टप्राप्तिहानीच्छया वैदिकक्रियास्वप्रवृत्तेर्दर्शनात् । अतो नातिरिक्तात्मज्ञानं विना सांपरायिके प्रवृत्तिरित्यर्थः ।

तस्माज्जन्मान्तरसंबन्ध्यात्मास्तित्वे जन्मान्तरेष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्तते । "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इत्युपक्रम्यास्तीत्येवोपलब्धव्य इत्येवमादिनिर्णयदर्शनात् । "यथा च मरणं प्राप्य" इत्युपक्रम्य—

"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुम[4]न्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्"

इति च "स्वयं ज्योतिः" इत्युपक्रम्य "तं विद्याकर्मणी समन्वारभेते" "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इति [5]च[6] "ज्ञपयिष्यामि" इत्युपक्रम्य "विज्ञानमयः" इति च व्यतिरिक्तात्मास्तित्वम् ।

ननु विधयः साधनाविशेषं बोधयन्तो नातिरिक्तात्मास्तित्वादौ मानं वाक्यभेदप्रसङ्गादित्यत आह—तस्मादिति । अतिरिक्तात्मधियं विना पारलौकिकप्रवृत्त्यनुपपत्त्या कर्मकाण्डप्रामाण्यायोगादिति यावत् । विधीनां श्रुत्यर्थाभ्यामुभयार्थत्वमविरुद्धमित्यर्थः । न केवलं विधिभिरेवार्थादाक्षिप्तमातिरिक्तात्मास्तित्वं किंतु श्रुत्याऽपि स्वमुखेनोक्तमित्याह—येयमिति । निर्णयदर्शनाद्व्यतिरिक्तात्मास्तित्वमिति संबन्धः । तत्रैव प्रकृतोपयोगित्वेनोपक्रमोपसंहारान्त[7]रे दर्शयति—यथा चेति । पूर्ववदेव संबन्धद्योत-

१ क. घ. तत्सा° । ण. तत्र सामा° । २ ख. घ. °लुण्ठित° । ३ घ. ज. ण. °विद्याप्ति° ।
४ ग. छ. °न्ये तु सं° । ५ क. ख. ग. च. छ. ज. °ति ज्ञ° । ६ झ. च ज्ञाप° । ७ घ. ण. °न्तरं द° ।

नार्थं चकारः । उपक्रमोपसंहारैकरूप्यात्कठवल्लीनामतिरिक्तात्मास्तित्वे तात्पर्यमुक्त्वा बृहदारण्यकवाक्यस्यापि तत्र तात्पर्यमाह—स्वयमिति । न हि प्रसिद्धजडत्वस्य देहादेः स्वयंज्योतिष्ट्वमिति ज्योतिर्ब्राह्मणगतोपक्रमस्तद्विषयो देहादिव्यतिरिक्तात्मानमधिकरोति । तं प्रेतं विद्याकर्मणी पूर्वोपार्जिते फलदानायानुगच्छतः । स च गत्वा ज्ञानकर्मानुगुणं फलमनुभवतीति शारीरकब्राह्मणगतोपसंहारोऽपि जन्मान्तरसंबन्धविषयः । नचात्रैव भस्मीभवतो देहादेर्जन्मान्तरसंबन्धो युक्तः । तेनाऽऽत्मा देहादिव्यतिरिक्तो जन्मान्तरसंबन्धी सिद्धो ब्राह्मणाभ्यामित्यर्थः । अजातशत्रुब्राह्मणे च व्येव त्वा ज्ञपयिष्यामीत्युपक्रमो व्यतिरिक्तात्मास्तित्वविषयः । न हि प्रत्यक्षे देहादौ जिज्ञासाऽस्ति । तत्रैवोपसंहारे "य एष विज्ञानमयः पुरुषः" इति विज्ञानमयविशेषणादतिरिक्तात्मास्तित्वं दर्शितं न हि देहादेर्विज्ञानमयत्वमस्ति तस्मात्तदप्युपक्रमोपसंहाराभ्यां व्यतिरिक्तात्मास्तित्वं गमयतीत्याह—ज्ञपयिष्यामीत्युपक्रम्येति । नचोदाहृतानां वाक्यानामप्रामाण्यम् । तत्प्रामाण्यस्यौत्पत्तिकसूत्रे हेत्वविशेषादभ्युपेयत्वादिति भावः ।

तत्प्रत्यक्षविषयमेवेति चेत् । न । वादिविप्रतिपत्तिदर्शनात् । न हि देहान्तरसंबन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युर्नास्त्यात्मेति वदन्तः । न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति ।

यथोक्तात्मन्यहंप्रत्ययो मानं तत्र देहाकारास्फुरणादतिरिक्तात्मास्तित्वस्य तेनैव स्फूर्त्युपपत्तेरतो न तत्र श्रुतिप्रामाण्यमिति शङ्कते—तत्प्रत्यक्षेति । प्रत्यक्षस्य विषयोऽवकाशो ऽस्मिन्निव्यतिरिक्तात्मास्तित्वमुच्यते । यद्यपि व्यतिरिक्तात्मास्तित्वं त्वदभिप्रायेणाहं धीगोचरस्तथाऽपि न सा व्यतिरेकमात्मनो गोचरयति युक्त्यागमविवेकशून्यानामहंप्रत्ययभाजां व्यतिरेकप्रत्ययप्राप्तौ विपश्चितां विप्रतिपत्त्यभावप्रसङ्गादिति परिहरति—न वादीति । वेदप्रतिकूला वादिनो नास्तिका नैव विवादं मुञ्चन्तीत्याह—न हीति । तेषु प्रातिकूल्यसंभावनार्थं विशेषणं नेत्यादि । इति वदन्तः सन्तो नोऽस्माकं प्रतिकूला न हि स्युरेवं वदनस्यैवासंभवादध्यक्षविरोधादिति योजना । प्रत्यक्षे विषये विप्रतिपत्त्यभावे दृष्टान्तमाह—न हीति ।

स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत् । न । निरूपितेऽभावात् । न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति । वैनाशिकास्त्वहमिति प्र-

१ घ. ण. °नार्थश्चका° । २ क. त्वा ज्ञाप° । ३ ग. °ह ज्ञाप° । ४ झ. °त् । नापि दे° । ५ ण. °ति । तत्प्रत्य° । ६ ण. °योऽस्मि° । ७ क °लक्षवि° । ८ ग. ण. °ये प्र° ।



त्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य[1] नास्तित्वमेव प्रतिजानते ।

तत्र व्यभिचारं शङ्कते—स्थाण्वादाविति । प्रत्यक्षे धर्मिणि स्थाणुर्वा पुरुषो वेति विप्रतिपत्तेरुपलम्भान्न प्रत्यक्षे विप्रतिपत्त्यभावो व्यभिचारादिति शङ्कार्थः । आदिपदेन[2] पाषाणादौ गजादिविप्रतिपत्तिः संगृह्यते । किं प्रत्यक्षमात्रे विप्रतिपत्तिः किंवा तेन विविक्ते प्रतिपन्ने । नाऽऽद्योऽङ्गीकारात् । नचैवमात्मनि प्रत्यक्षे विप्रतिपत्तावपि नाऽऽगमान्वेषणा । तेनैव तन्निरासेन[3] तन्निर्णयादिति मन्वानो द्वितीयं दूषयति—नेत्यादिना । प्रत्यक्षतो विविक्तेऽर्थे विप्रतिपत्त्यभावं प्रपञ्चयति-न हीति । आत्मनः स्थूलदेहव्यतिरिक्तत्वं न प्रत्यक्षमिति प्रतिपाद्य सूक्ष्मदेहव्यतिरिक्तत्वमपि नाहंप्रत्ययग्राह्यमित्याह—वैनाशिकास्त्विति । ते खल्वहमिति धियमनुभवन्ति । तथाऽपि देहान्तरं स्थूलदेहातिरिक्तं सूक्ष्मं तत्र प्रधानभूताया बुद्धेरतिरिक्तस्याऽऽत्मनो नास्तित्वमेव पश्यन्ति । तन्नाहंधिया सूक्ष्मदेहातिरिक्तात्मसिद्धिरित्यर्थः ।

तस्मात्प्रत्यक्षविषयवैलक्षण्यात्प्रत्यक्षान्नाऽऽत्मास्तित्वसिद्धिः । तथाऽनुमानादपि । श्रुत्याऽऽत्मास्तित्वे लिङ्गस्य दर्शितत्वाल्लिङ्गस्य[4] च प्रत्यक्षविषयत्वान्नेति चेत् । न । जन्मान्तरसंबन्धस्याग्रहणात् । आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्चाहंप्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवानीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चाऽऽत्मेति ।

किंच प्रत्यक्षस्य विषयो रूपादिस्तद्राहित्यं तद्वैलक्षण्यं तदात्मकोऽस्ति । "अशब्दमस्पर्शमरूपम्" इत्यादिश्रुतेः । न हि रूपादि तदाधारं[6] विना प्रत्यक्षं क्रमते[5] । अतो न देहाद्यतिरिक्तात्मास्तित्वस्य प्रत्यक्षात्प्रसिद्धिरित्याह—तस्मादिति । प्रत्यक्षतो विविक्ते विप्रतिपत्त्ययोगात् । प्रकृते च तद्दर्शनादिति यावत् । अथेच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपवदित्यनुमानादतिरिक्तात्मसिद्धिरिति नेत्याह—तथेति । नाऽऽत्मास्तित्वप्रसिद्धिरिति संबन्धार्थस्तथाशब्दः । अयं भावः—इच्छादीनां स्वातन्त्र्ये स्वरूपासिद्धिः पारतन्त्र्ये परस्पराश्रयत्वमाधारस्येदानीमेव साध्यमानत्वात् । क्वचिच्छब्देन चाऽऽश्रयमात्रवचने सिद्धसाधनत्वं मनसस्तदाश्रयस्य सिद्धत्वादात्मोक्तौ च दृष्टान्तस्य साध्यविकलतेति । "यः प्राणेन प्राणिति" इत्यादिश्रुत्या प्राणनादिव्यापाराख्यस्य लिङ्गस्याऽऽत्मास्तित्वे प्रदर्शितत्वात्तस्य

१ ग. छ. ञ. देहव्य° । २ ञ. ण. °दिशब्देन । ३ घ. ञ. °ने त° । ४ ग. घ. ङ. °ङ. झ. °त्वयं लि° । ५ ग. घ. ङ. च. ञ. °त्यक्षोऽनु° । ६ घ. ञ. °रं वा वि° । ७ क. °हाव्याति° । ८ घ. ञ. °द्रूपादिव° । ९ घ. °स्याऽऽत्मनि प° ।

च व्याप्तिसापेक्षस्य प्रत्यक्षादिसिद्धात्मविषयत्वान्न तस्य शब्दैकगम्यतेति शङ्कते — श्रुत्येति । आत्मनः स्वातन्त्र्येण लिङ्गगम्यत्वाभिप्रायेण श्रुत्या लिङ्गं नोपन्यस्तमिति परिहरति — नेति । योऽचेतनव्यापारः स चेतनाधिष्ठानपूर्वको यथा रथादिव्यापारः । प्राणनादिव्यापारस्याप्यचेतनव्यापारत्वाच्चेतनाधिष्ठानपूर्वकत्वमिति संभावनामात्रेण लिङ्गोपन्यासः । न हि निश्चायकत्वेन[1] तदुपन्यस्यते । आत्मनो जन्मान्तरसंबन्धस्य प्रमाणान्तरेणाग्रहणात्तद्व्याप्तलिङ्गायोगादित्याह — जन्मान्तरेति । ननु व्यतिरिक्तात्मास्तित्वमागमैकगम्यं चेत्कथं तत्प्रत्यक्षमनुमेयं चेति वादिनो वदन्तीति तत्राऽऽह — आगमेन त्विति । येयं प्रेते विचिकित्सेत्याद्यागमेन "को ह्येवान्यात्" इत्यादिवेदोक्तैश्च प्राणनादिभिर्लौकिकैर्लिङ्गविशेषैरात्मास्तित्वे सिद्धे यथोक्तात्म[2]सिद्धिमनुसरन्तो वादिनो वैदिकमेवाहंप्रत्ययं प्रतिलभमाना वैदिकान्येव च लिङ्गानि पश्यन्तः स्वोत्प्रेक्षानिर्मितानि तानीति कल्पयन्तो द्विधाऽऽत्मानं वदन्ति । वस्तुतस्त्वात्मा यथोक्तश्रुत्यैकसमधिगम्य इत्यर्थः ।

सर्वथाऽप्यस्त्वात्मा देहान्तरसंबन्धीत्येवं प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्म[3]काण्डमारब्धम्[4] । न त्वात्मन इष्टानिष्टप्राप्तिपरिहारेच्छाकारणमात्मविषयमज्ञानं कर्तृ[5]भोक्तृ[6]स्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतम् । यावद्धि तन्नापनीयते तावदयं कर्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापि प्रवर्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्मसंज्ञकानि कर्माण्युपचिनोति बाहुल्येन स्वाभाविकदोषबलीयस्त्वात् । ततः स्थावरान्ताधोगतिः ।

तस्यास्येत्यादिना काण्डयोः संबन्धं प्रतिज्ञाय तादर्थ्येन सिद्धेऽर्थे वेदान्तप्रामाण्यं सर्वोऽपीत्यादिना प्रसाध्याधुना कर्मभिः शुद्धबुद्धेर्वैराग्यादिद्वारा ज्ञानोत्पत्तिरिति तयोः संबन्धं कथयति — सर्वथाऽपीति । आगमानुमानान्तराद्वा व्यतिरिक्तात्मास्तित्व[7]प्रतिपत्तावपीत्यर्थः । पुरुषार्थो[8]पायविशेषार्थि[9]नस्तज्ज्ञापनार्थं कर्म[10]काण्डमारब्धं चेत्तर्हि तत्रोक्तकर्मभिरेव विवक्षितपुमर्थसिद्धेर्वेदान्तारम्भवैयर्थ्यान्न संबन्धोक्तिः सावकाशेत्याशङ्क्याऽऽह — न त्विति । आत्माज्ञानं खल्वनर्थकारणमन्वयव्यतिरेकशास्त्रगम्यं मिथ्याज्ञानकार्यलिङ्गकं च । तच्चाकर्तृभोक्तृब्रह्मात्मज्ञानादपनेयम् । न हि तत्कर्मकाण्डोक्तैरेव कर्मभिः शक्यमपनेतुं विरोधाभावात् । तस्मात्[11]तद्बाधनार्थं ज्ञानसिद्ध्यै वेदान्तारम्भसंभवादुक्तसंबन्धसिद्धिरित्यर्थः । यदि कर्मभिरज्ञानं न निवर्तते । मा निवर्तिष्ट । सत्येव

---

१ ख. निश्चयाणक° । २ घ. ञ. ण. °क्तामात्म° । ३ क. घ. ज. °काण्डं समा° । ४ झ. °ब्धव्यम् । ५ क. ख. छ. °र्तृत्वभो° । ६ क. ख. घ. छ. °क्तृत्वस्व° । ७ ख. °स्तित्वोपप° । ८ ख. ज. ण. पुमर्थो° । ९ क. र्थितो ज्ञाप° । १० क. °काण्डं समा° । ११ ख. घ. °तद्बाधना° ।

तस्मिन्कर्मवशान्मोक्षः स्यादित्याशङ्क्याऽऽह—यावद्धीति । सम्यग्ज्ञानमेव साक्षान्मोक्षहेतुर्न कर्म । तत्तु प्रनाड्या तदुपयोगि । न हि सत्येवाज्ञाने मुक्तिः । तस्मिन्सति संसारस्य दुर्वारत्वात् । तस्मात्कर्मकाण्डस्य वैराग्यद्वारा प्रवेशो मुक्ताविति भावः । अयमित्यज्ञो निर्दिश्यते । रागद्वेषादीत्यादिशब्देनाविद्यास्मिताभिनिवेशादयो गृह्यन्ते । दोषाणां स्वाभाविकत्वं शास्त्रानपेक्षत्वम् । अपिकारः संभावनार्थः । दृष्टत्वमन्वयव्यतिरेकसिद्धत्वम् । अदृष्टत्वं शास्त्रमात्रगम्यत्वम् । अधर्मोपचयप्राचुर्ये हेतुमाह—स्वाभाविकेति । अथ वैराग्यार्थं कर्मफलं प्रपञ्चयन्नधर्मफलमाह—तत्र इति ।

उक्तं हि—

"शारीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति ।

कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वम् । ततो मनआदिभिरिष्टसाधनं बाहुल्येनोपचिनोति धर्माख्यम् । तद्द्विविधम्—ज्ञानपूर्वकं केवलं च । तत्र केवलं पितृलोकादिप्राप्तिफलम् । ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम् । तथा च शास्त्रम् "आत्मयाजी श्रेयान्देवयाजिनः" इत्यादि । स्मृतिश्च "द्विविधं कर्म वैदिकम्" इत्याद्या । साम्ये च धर्माधर्मयोर्मनुष्यत्वप्राप्तिः । एवं ब्रह्माद्या स्थावरान्ता स्वाभाविकाविद्यादिदोषवतो धर्माधर्मसाधनकृता संसारगतिर्नामरूपकर्माश्रया ।

तत्किं पुण्योपचयाभावादनवकाशं स्वर्गादिफलमिति नेत्याह—कदाचिदिति । शास्त्रीयसंस्कारस्य बलीयस्त्वे फलितमाह—तत इति । आदिशब्दो वाग्देहविषयः । फलविभागं वक्तुं कर्म भिनत्ति—तद्द्विविधमिति । तस्य मुक्तिफलत्वं निरसितुं फलं विभजते—तत्रेति । केवलमिष्टादिकर्मेति शेषः । 'कर्मणा पितृलोकः' इति हि वक्ष्यति । तस्मिन्फले नानात्वमभिप्रेत्याऽऽदिशब्दः । 'विद्यया देवलोकः' इति श्रुतिमाश्रित्याऽऽह—ज्ञानेति । देवलोको यस्याऽऽदिर्ब्रह्मलोको यस्यान्तस्तस्यार्थस्य प्राप्तिरेव फलमस्येति विग्रहः । उक्तेऽर्थे शातपथीं श्रुतिं प्रमाणयति—तथा चेति । सर्वत्र परमात्मभावनापुरःसरं नित्यं कर्मानुतिष्ठन्नात्मयाजी । कामनापुरःसरं देवान्यजमानो देवयाजी । तयोर्मध्ये कतरः श्रेयानिति विचारे सत्यात्मयाजी श्रेयानिति निर्णयः कृतः । अतो ज्ञानपूर्वकं कर्म देवलोकस्य कामनापूर्वं तु पितृलोकस्य प्रापकमित्यर्थः ।

'प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
इह वाऽमुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ॥
निष्कामं ज्ञानपूर्वं तु निवृत्तमभिधीयते' ।

---

१ क. मत्यादि° । २ क. °यान्न देवयाजी" इ° । ३ घ. ञ. ण. लोकश्चान्तो यस्य तस्यार्थ° । ४ ख. ञ. ण. °पूर्वं क° । ५ क. घ. ञ. ण. °ह चामु° ।

इत्यादि मनुस्मृतिं चात्रैवोदाहरति— स्मृतिश्चेति । धर्माधर्मयोरेकैकस्य फलमुक्त्वा मिश्रयोः फलमाह —साम्ये चेति । उक्तं हि—

‘ उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः ’ इति ।

त्रिविधमपि कर्मफलं वैराग्यार्थं संक्षिप्योपसंहरति—एवमिति । सा चाविद्याकृतत्वादनर्थरूपेत्याह— स्वाभाविकेति । विचित्रकर्मजन्यतया तस्या वैचित्र्यमाह— धर्माधर्मेति । तर्हि धर्माधर्माभ्यामेव तन्निर्माणसंभवात्कृतमाविद्ययेत्यत आह—नामेति । तेषां सूक्ष्मावस्थाऽविद्या तदालम्बनेति यावत् । धर्मादेरविद्यायाश्च निमित्तत्वोपादानत्वाभ्यामुपयोग इति भावः ।

**तदेवेदं व्याकृतं साध्यसाधनरूपं जगत्प्रागुत्पत्तेरव्याकृतमासीत् । स एष बीजाङ्कुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनन्तोऽनर्थ इत्येतस्माद्विरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते ।**

ननु संसारगतेराविद्यत्वमयुक्तं प्रत्यक्षादिप्रतिपन्नत्वात्तन्नामरूपाभ्यामेव व्याक्रियतेति श्रुतौ च नामरूपात्मनो जगतोऽभिव्यक्तिश्रवणान्न च प्रामाणिकस्याविद्याकृतत्वमत आह—तदेवेदमिति । जगतः स्वरूपमात्मा तत्राध्यस्तत्वात्तस्मादात्मतत्त्वेऽनभिव्यक्ते प्रत्यक्षादिना श्रुत्या चाभिव्यक्तमिव दृश्यमानमपि जगदनभिव्यक्तमेवेति न तस्याविद्याकृतत्व[4]क्षतिरिति भावः । अविद्याकृतां संसारगतिमनुभाषते—स एष इति । नन्वविद्याकृतत्वे कथमनादित्वमित्याशङ्क्य तस्य प्रवाहरूपेणेत्याह—बीजाङ्कुरादिवदिति । चैतन्यवदात्मनि तस्याविद्याकृतत्वानुपपत्तिमाशङ्क्य नानारूपत्वेन ततो विलक्षणत्वादेकरूपे युक्तं तस्य कल्पितत्वमित्याह—क्रियेति । तर्हि कादाचित्कतया साधनापेक्षामन्तरेण नाशो भविष्यतीत्याशङ्क्याऽऽह—अनादिरिति । अनादेरपि संसारस्य प्रागभाववन्निवृत्तिः स्यादिति चेत्तथाऽपि ब्रह्मविद्यामन्तरेण नाशो नास्तीत्याह—अनन्त इति । प्रयत्नतो हेयत्वं द्योतयितुमनर्थ इति विशेषणम् । नैसर्गिक इति पठे तु कारणरूपेण तत्त्वमुन्नेयम् । यस्मात्कर्म संसारफलं न मोक्षं फलयति तस्मात्सनिदानसंसारनिवर्तकात्मज्ञानार्थत्वेन साधनचतुष्टयसंपन्नमधिकारिणमधिकृत्य वेदान्तारम्भः संभवतीत्युपसंहरति—इत्येतस्मादिति ।

**अस्य स्वश्वमेध[6]कर्म[7]संबन्धिनो विज्ञानस्य प्रयोजनं येषामश्वमेधे नाधिकार-**

---

१ क. ख. °राविद्यावि° । २ ङ. झ. °न्तो नैसर्गिकोऽन° । ३ क. ख. °द्यकत्व° । ४ ण. °तिमुक्ताम° । ५ क. ज. ण. °राविद्येति । ६ झ. °मेधीयसं° । ७ च. °धसं° । ८ ग. घ. ङ. च. छ. ञ झ. °न्धिवि° ।

**स्त्वेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः । "विद्यया वा कर्मणा वा" "तद्धैतल्लोकाजिदेव" इत्येवमादिश्रुतिभ्यः ।**

यथोक्तज्ञानार्थत्वेनोपनिषदारम्भे 'ब्रह्म वा इदमग्र आसीत्' इत्यारब्धव्यं तस्मादारभ्य ज्ञानोपदेशात् । 'उषा वा अश्वस्य' इत्यारम्भस्तु न युक्तः साक्षादत्र तदनुक्तेरित्याशङ्क्यास्मादारभ्योपनिषदारम्भेऽभीष्टं फलमभिधित्समानः प्रथममश्वमेधोपासनफलमाह–**अस्य** इति । राजयज्ञत्वादश्वमेधस्य तदनधिकारिणामपि ब्राह्मणादीनां तत्फलार्थिनामस्मादेवोपासनात्तत्प्राप्तिरिति मत्वा श्रुतौ तदुपासनोक्तिरित्यर्थः । किमत्र नियामकमित्याशङ्क्य विकल्पश्रवणं केवलस्यापि ज्ञानस्य साधनत्वं सूचयतीत्यर्थतो विकल्पश्रुतिमुदाहरति–**विद्ययेति** । तत्फलप्राप्तिरिति पूर्वेण संबन्धः । तत्रैव श्रुत्यन्तरमाह–**तद्धेति** । तदेतत्प्राणदर्शनं लोकप्राप्तिसाधनं प्रसिद्धमिति यावत् । आदिशब्देन केवलोपास्त्या ब्रह्मलोकाप्तिवादिन्यः श्रुतयो गृह्यन्ते ।

**कर्मविषयत्वमेवं विज्ञानस्येति चेत् । न । "योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति विकल्पश्रुतेः । विद्याप्रकरणे चाऽऽम्नानात् । कर्मान्तरे च संपादनदर्शनाद्विज्ञानात्तत्फलप्राप्तिरस्तीत्यवगम्यते । सर्वेषां च कर्मणां परं कर्माश्वमेधः । समष्टिव्यष्टिप्राप्तिफलत्वात् ।**

अश्वमेधे यदुपासनं तस्याप्यश्वादिवत्तच्छेषत्वेन फलवत्त्वान्न स्वातन्त्र्येण तद्वत्त्वमङ्गेषु स्वतन्त्रफलाभावादिति शङ्कते–**कर्मविषयत्वमिति** । ज्ञानस्य क्रत्वर्थत्वं दूषयति–**नेति** । पूर्वत्रार्थतो दर्शितां विकल्पश्रुतिमत्र हेतुतया स्वरूपतोऽनुक्रामति–**योऽश्वमेधेनेति** । स सर्वं पाप्मानं तरति तरति ब्रह्महत्यामिति संबन्धः । ज्ञानकर्मणोस्तुल्यफलत्वस्य न्याय्यत्वादिति शेषः । उपास्तिफलश्रुतेरर्थवादत्वमाशङ्क्याश्वमेधवदुपास्तेरपि कर्मत्वाद्विहितत्वात्कर्मप्रकरणाद्व्युत्थितत्वाच्च मैवमित्याह–**विद्येति** । फलश्रुतेरर्थवादत्वाभावे हेत्वन्तरमाह—**कर्मान्तरे चेति** । अश्वमेधातिरिक्ते कर्मण्ययं वाव लोकोऽग्निरित्यादौ चित्याग्न्यादावेतल्लोकादिसंपादनस्य स्वतन्त्रफलोपासनस्य दर्शनान्न फलश्रुतेरर्थवादतेत्यर्थः । अश्वमेधोपासनं न क्रत्वर्थं किंतु पुरुषार्थं तत्र चाधिकारोऽश्वमेधकर्तृत्वनधिकारिणामपीत्येतावदेवेष्टं चेदुपासने कर्मप्रकरणस्थेऽपि तल्लाभाद्विद्याप्रकरणे नास्याध्ययनमर्थवदित्याशङ्क्याऽऽह–**सर्वेषां चेति** । परत्वे हेतुः–**समष्टीति** । अनुवृत्तव्यावृत्तरूपहिरण्यगर्भप्राप्तिहेतुत्वात्तस्य श्रेष्ठतेत्यर्थः ।

**तस्य चेह ब्रह्मविद्याप्रारम्भ आम्नानं सर्वकर्मणां संसारविषयत्वप्रदर्शनार्थम् । तथा च दर्शयिष्यति फलमशनायां मृत्युभावम् ।**

---

१ ख. घ. ण. 'भीष्टफ°' । २ क. ख. 'धनमि°' । ३ ज्ञ. 'व ज्ञा°' । ४ ग. ङ. च. छ. ज. 'नात्फ°' । ५ च. छ. ज्ञ. 'स्तीति ग°' । ६ क. ङ. 'त्वद°' । ७ ख. ग. 'नायामृ°' । ८ क. भावभयम् ।

तस्य पुण्यश्रेष्ठत्वेऽपि प्रकृते किमायातं तदाह— तस्य चेति । यदा क्रतुप्रधानस्याश्वमेधस्योपास्तिसहितस्यापि संसारफलत्वं तदाऽल्पीयसामग्निहोत्रादीनां संसारफलत्वं किं वाच्यमित्यस्मिन्कर्मराशौ बन्धहेतौ विरक्ताः[2] साधनचतुष्टयविशिष्टा[3] ज्ञानमपेक्षमाणास्तदुपाये श्रवणादावेव सर्वकर्मसंन्यासपूर्वके कथं प्रवर्तेरन्नित्याशयवती श्रुतिरुपासनां विद्यारम्भेऽभिदधातीति । तेनोषा वा अश्वस्येत्याद्युपनिषदारम्भो युक्तोऽस्य विशिष्टाधिकारिसमर्पकत्वादित्यर्थः । उपासनफलस्य संसारगोचरत्वमेव कुतः सिद्धमत आह— तथा चेति । अशनाया हि मृत्युः स वै नैव रेमे सोऽबिभेदिति मयारत्यादिश्रवणादुपास्तियुक्तक्रतुफलस्य सूत्रस्य बन्धमध्यपातित्वाद्विशिष्टोऽपि क्रतुर्न मुक्तये पर्याप्नोतीत्यर्थः ।

**न नित्यानां संसारविषयफलत्वमिति चेत् । न । सर्वकर्मफलोपसंहारश्रुतेः । सर्वं हि पत्नीसंबद्धं कर्म । "जाया मे स्यादेतावान्वै कामः" इति निसर्गत एव सर्वकर्मणां काम्यत्वं दर्शयित्वा पुत्रकर्मापरविद्यानां च "अयं लोकः पितृलोको देवलोकः" इति फलं दर्शयित्वा त्र्यन्नात्मकतां चान्त उपसंहरिष्यति "त्रयं वा इदं नाम रूपं कर्म" इति । सर्वकर्मणां फलं व्याकृतं संसार एवेति ।**

उक्ते सर्वकर्मणां बन्धफलत्वे नित्यनैमित्तिकानां न तत्फलत्वं तेषां विध्युद्देशे फलाश्रुतेर्नष्टाश्वदग्धरथन्यायेन मुक्तिफलत्वलाभादिति शङ्कते— न नित्यानामिति । एतावान्वै काम इति सर्वकर्मणामविशेषेण फलसंबन्धश्रवणात्पश्वादेश्च काम्यफलत्वस्य तद्विध्युद्देशवशात्सिद्धत्वात्कर्मणा पितृलोक इति वाक्यस्य नित्यादिकर्मफलविषयत्वान्न मोक्षफलत्वाशङ्केति परिहरति— नेति । उक्तमेव स्फुटयति— सर्वं हीति । पत्नीसंबन्धे मानमाह— जायेति । तथाऽपि कथं कर्मणः सर्वस्य कामोपायत्वं तत्राऽऽह— एतावान्वै काम इति । कथं तर्हि तेषां फलभेदो लभ्यते तत्राऽऽह— पुत्रेति । अथैवं फलविभागे कथं समष्टिव्यष्टिप्राप्तिफलत्वमश्वमेधस्योक्तमत आह— त्र्यन्नात्मकतां चेति । अस्याध्यायस्यावसाने कर्मफलस्य हिरण्यगर्भरूपतां त्रयमित्याद्या श्रुतिरुपसंहरिष्यतीत्यर्थः । उपसंहारश्रुतेस्तात्पर्यमाह— सर्वकर्मणामिति ।

**इदमेव त्रयं प्रागुत्पत्तेस्तद्ध्यव्याकृतमासीत् । तदेव पुनः सर्वप्राणिकर्मवशाद्व्याक्रियते बीजादिव वृक्षः । सोऽयं व्याकृताव्याकृतरूपः**

---

१ घ. ञ. °लत्वे किं । २ घ. °र्वकं क° । ३ घ. °थं न प्र° । ४ ख. °सनं वि° । ५ क. ञ. °वातीति । ६ ञ. ण. °स्यारभ्योप° । ७ ण. °सनाफ° । ८ घ. °र्याप्तो भवती° । ९ क. ख. °त्वाऽन्ना° । १० क. ग. घ. ङ. च. छ. ज. झ. °हराति । ११ क. ख. °ह अन्ना° ।

संसारोऽविद्याविषयः क्रियाकारकफलात्म[1]कतयाऽऽत्म[2]रूपत्वेनाध्यारोपितोऽविद्ययैव मूर्तामूर्ततद्वासनात्मकोऽतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफलभेदादिविपर्ययेणावभासते । अतोऽस्मात्क्रियाकारकफलभेदस्वरूपादेतावदिदमिति साध्यसाधनरूपाद्विरक्तस्य कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पविज्ञानापनयाय ब्रह्मविद्याऽऽरभ्यते ।

कर्मफलं संसारश्चेत्प्राक्तदनुष्ठानात्तदभावान्मुक्तानां पुनर्बन्धः स्यादित्याशङ्क्याऽऽह— इदमेवेति । तर्हि तस्यामवस्थायामिति यावत् । तस्य पुनर्व्याकरणे कारणमाह— तदेवेति । व्याकृताव्याकृतात्मनः संसारस्य[3] प्रामाणिकत्वेन सत्यत्वमाशङ्क्याविद्याकृतत्वेन तन्मिथ्यात्वमुक्तं स्मारयति—सोऽयमिति । स एष हि भ्रान्तिविषयो न प्रामाणिकस्तत्कुतोऽस्य सत्यतेत्यर्थः । कथमस्याऽऽत्मन्यद्वये कूटस्थे प्राप्तिरित्याशङ्क्याऽऽह—क्रियेति । समारोपे मूलकारणमाह—अविद्ययेति । आत्मन्यविद्यारोपितं द्वैतमित्यत्र द्वे वाव ब्रह्मणो रूपे मूर्तं[4] चैवामूर्तं चेत्यादिवाक्यं प्रमाणयति—मूर्तेति । नन्वात्मन्यारोपो नोपपद्यते तस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य द्वैतविलक्षणत्वादसति सादृश्येऽध्यासासिद्धेरत आह- अत इति । संसाराद्वैलक्षण्यमेव प्रकटयति—अनामेति । आदिपदेनान्येऽपि विपर्ययभेदाः संगृह्यन्ते । आरोपे प्रमिणोमि करोमि भुञ्जे चेत्यनुभवं प्रमाणयति—अवभासत इति । आत्मन्यध्यासः सादृश्याद्यभावेऽपि नभसि मलिनत्वादिवद्यतोऽनुभूयतेऽतः सविलासाविद्यानिवर्तकब्रह्मविद्यार्थत्वेनोपनिषदारम्भः संभवतीत्युपसंहरति—अत इति । एतावदित्यन[5]र्थात्म[6]त्वोक्तिः । तत्त्वज्ञानादज्ञाननिवृत्तौ दृष्टान्तमाह—रज्ज्वामिवेति ।

तत्र तावदश्वमेधाविज्ञानाय " उषा वा अश्वस्य " इत्यादि । तत्राश्वविषयमेव दर्शनमुच्यते प्राधान्यादश्वस्य । प्राधान्यं च तन्नामाङ्कितत्वात्क्रतोः प्राजापत्यत्वाच्च ।

ॐ उषा वा अश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः
प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माऽश्वस्य
मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं
दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि

१ ग. च. छ. ञ °त्मत° । २ ग. ङ. झ. °त्मस्वरू° । ३ ख. ग. घ. छ. °नयनाय । ४ क. ख. °स्य च प्रा° । ५ ङ. °र्तं चामु° । ६ क. ख. °नर्थोक्तिः । ६ च. °त्मकत्वो° । ८ क. °व तावद्दर्श° ।

मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि । ऊवध्यꣳ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते[1] तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १ ॥

उषा[2] इति ब्राह्मो मुहूर्त[3] उषाः । वैशब्दः[4] स्मारणार्थः प्रसिद्धं कालं स्मारयति । शिरः प्राधान्यात् । शिरश्च प्रधानं शरीरावयवानाम् । अश्वस्य मेध्यस्य मेधार्हस्य यज्ञियस्योषाः[5] शिर इति संबन्धः ।

एवमुपनिषदारम्भे स्थिते प्राथमिकब्राह्मणयोरवान्तरतात्पर्यमाह—तत्र तावदिति । आद्यस्य पुनरवान्तरतात्पर्यं दर्शयति—तत्रेति । नन्वश्वमेधस्याङ्गबाहुल्ये कस्मादश्वाख्याङ्गविषयमेवोपासनमुच्यते तत्राऽऽह—प्राधान्यादिति । तदेव कथमिति तदाह—प्राधान्यं चेति । प्रजापतिदेवताकत्वाच्चाश्वस्य प्राधान्यमित्याह—प्राजापत्यत्वाच्चेति । प्रतीकमादाय व्याचष्टे—उषा इत्यादिना[6] । स्मारणार्थत्वमेव निपातस्य स्फुटयति—प्रसिद्धमिति । शास्त्रीये लौकिके च व्यवहारे प्रसिद्धो ब्राह्मो मुहूर्तस्तं कालमिति यावत् । उषसि शिरःशब्दप्रयोगे दिनावयवेषु तस्य प्राधान्यं हेतुमाह—प्राधान्यादिति । तथाऽपि कथं तत्र तच्छब्दप्रयोगस्तत्राऽऽह—शिरश्चेति । आश्वमेधिकाश्वशिरस्युषसो दृष्टिः कर्तव्येत्याह—अश्वस्येति ।

कर्माङ्गस्य पशोः संस्कर्तव्यत्वात्कालादिदृष्टयः शिरआदिषु क्षिप्यन्ते । प्राजापत्यत्वं च प्रजापतिदृष्ट्यध्यारोपणात् । काललोकदेवतात्वा[7]ध्यारोपणं च प्रजापतित्वकरणं पशोः । एवंरूपो हि प्रजापतिः । विष्णुत्वादिकरणमिव प्रतिमादौ ।

कालादिदृष्टिरश्वाङ्गेषु किमिति क्षिप्यतेऽश्वाङ्गदृष्टिरेव तेषु किं न स्यादित्याशङ्क्याऽऽह—कर्माङ्गस्येति । अङ्गेष्वनङ्गमिति क्षेपे हेत्वन्तरमाह—प्राजापत्यत्वं

१ ट. °द्विधुनु° । २ क. च. °षा वा इ° । ३ ख. घ. ङ. च. छ. उषा । ४ ख. ङ. छ. ज. झ. °ब्दः स्मर° । ५ ख. घ. च. छ. °स्योषा शि° । ६ क. ख. °ना । स्मर° । ७ ख. °तात्मत्वा° ।

चेति । अश्वस्य सेत्स्यतीति शेषः । तत्र हेतुः—प्रजापतीति । ननु कालादिदृष्टयोऽश्वावयवेष्वारोप्यन्ते न तस्य प्रजापतित्वं क्रियते तत्राऽऽह—कालेति । कालाद्यात्मको हि प्रजापतिः । तथा च यथा प्रतिमायां विष्णुत्वकरणं तद्दृष्टिस्तथा कालादिदृष्टिरश्वावयवेषु तस्य प्रजापतित्वकरणम् । अश्वमेधाधिकारी हि सत्यश्वे कर्मणो वीर्यवत्तरत्वार्थं कालादिदृष्टीरश्वावयवेषु कुर्यात् । तदनधिकारी त्वश्वाभावे स्वात्मानमश्वं कल्पयित्वा स्वशिरःप्रभृतिषु कालादिदृष्टिकरणेन प्रजापतित्वं संपाद्य प्रजापतिरस्मीति[1] ज्ञानात्तद्भावं प्रतिपद्येतेति भावः ।

सूर्यश्चक्षुः शिरसोऽनन्तरत्वात्सूर्याधिदैवत्वाच्च । वातः प्राणो वायुस्वाभाव्यात् । व्यात्तं विवृतं मुखमग्निर्वैश्वानरः । वैश्वानर इत्यग्नेर्विशेषणम् । वैश्वानरो नामाग्निर्विवृतं मुखमित्यर्थो मुखस्याग्निदैवतत्वात् । संवत्सर आत्मा संवत्सरो द्वादशमासस्त्रयोदशमासो वा । आत्मा शरीरम् । कालावयवानां च संवत्सरः शरीरं शरीरं चाऽऽत्मा । "मध्यं ह्येषामङ्गानामात्मा" इति श्रुतेः । अश्वस्य मेध्यस्येति सर्वत्रानुषङ्गार्थं पुनर्वचनम् ।

चक्षुषि सूर्यदृष्टौ हेतुमाह—शिरस इति । उषसोऽनन्तरत्वं सूर्ये दृष्टं चक्षुषि च शिरसोऽनन्तरत्वं दृश्यते तस्मात्तत्र तद्दृष्टिर्युक्तेत्यर्थः । तत्रैव हेत्वन्तरमाह—सूर्येति । "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इति श्रुतेश्चक्षुषि सूर्योऽधिष्ठात्री देवता तेन सामीप्यात्तत्र तद्दृष्टिरित्यर्थः । अश्वप्राणे वायुदृष्टौ चलनस्वाभाव्यं हेतुः । अश्वस्य विदारिते मुखे भवत्वग्निदृष्टिस्तथाऽपि पर्यायोपादानं व्यर्थमित्याशङ्क्य क्रव्यादादिव्यावृत्त्यर्थं विशेषणमित्याह—वैश्वानर इत्यग्नेरिति । "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इति श्रुतिमाश्रित्य मुखे तद्दृष्टौ हेतुमाह—मुखस्येति । अधिकमासमनुसृत्य त्रयोदशमासो वेत्युक्तम् । शरीरे संवत्सरदृष्टिरित्यत्राऽऽत्मत्वं हेतुमाह—कालेति । आत्मा हस्तादीनामङ्गानामिति शेषः । कालावयवानां संवत्सरस्याऽऽत्मत्ववदङ्गानां शरीरस्याऽऽत्मत्वे प्रमाणमाह- मध्यं हीति । पुनरुक्तेरर्थवत्त्वमाह—अश्वस्येति ।

द्यौः पृष्ठम् । ऊर्ध्वत्वसामान्यात् । अन्तरिक्षमुदरं सुषिरत्वसामान्यात् । पृथिवी पाजस्यं पादस्यमिति वर्णव्यत्ययेन पादासनस्थानमित्यर्थः । दिशश्चतस्रोऽपि पार्श्वे पार्श्वेन दिशां संबन्धात् । पार्श्वयोर्दिशां च संख्यावैषम्यादयुक्तमिति चेत् । न । सर्वमुखत्वोपपत्तेरश्वस्य पार्श्वाभ्यामेव सर्वदिशां संब-

---

१ क. °ति विज्ञा° । २ ग. च वातस्वा° । ३ घ. ञ. ण. °दिनिवृ° । ४ छ. पादास्य° । ५ क. °दस्यम् । पाजस्यमि° ।

न्यायाददोषः । अवान्तरदिश आग्नेय्याद्याः पर्शवः पार्श्वास्थीनि ।

पृष्ठे द्युलोकदृष्टौ हेतुमाह—ऊर्ध्वत्वेति । उदरेऽन्तरिक्षदृष्टौ निमित्तमाह—सुषिरत्वेति । पादा अस्यन्ते यस्मिन्निति व्युत्पत्तिमाश्रित्य विवक्षितमाह—पादेति । अश्वस्य हि खुरे पादासनत्वसामान्यात्पृथिवीदृष्टिरित्यर्थः । पार्श्वयोर्दिक्चतुष्टयदृष्टौ हेतुमाह—पार्श्वेनेति । द्वे पार्श्वे चतस्रश्च दिश[1]स्तत्र कथं तयोस्तदारोपणं द्वाभ्यामेव द्वयोः संबन्धादिति शङ्कते—पार्श्वयोरिति । यद्यपि द्वे दिशौ द्वाभ्यां पार्श्वाभ्यां संबध्येते तथाऽप्यश्वस्य प्राङ्मुखत्वे प्रत्यङ्मुखत्वे च दक्षिणोत्तरयोस्तन्मुखत्वे च प्राक्प्रतीच्यो-र्दिशोस्ताभ्यां संबन्धसंभवात्तत्र तद्दृष्टिरविरुद्धेति परिहरति—नेत्यादिना । तदुपपत्तौ चाश्वस्य चारिष्णुत्वं हेतूकर्तव्यम् । पार्श्वास्थिष्ववान्तरदिशामारोपे पार्श्वदिक्संबन्धो हेतुः ।

ऋतवोऽङ्गानि संवत्सरावयवत्वादङ्गसाधर्म्यात् । मासाश्चार्धमासाश्च पर्वाणि संधयः संधिसामान्यात् । अहोरात्राणि प्रतिष्ठाः । बहुवचनात्प्राजापत्यदैवपित्र्यमानुषाणि प्रतिष्ठाः पादाः प्रतितिष्ठत्येतैरिति । अहोरात्रैर्हि कालात्मा प्रतितिष्ठत्यश्व[2]श्च पादैः । नक्षत्राण्यस्थीनि शुक्लत्वसामान्यात् । नभो नभस्था मेघा अन्तरिक्षस्योदरत्वात्कर्मांसान्युदकरुधिरसेचनसामान्यात् ।

ऋतवः संवत्सरस्याङ्गानि हस्तादीनि च देहस्यावयवास्तस्मात्तद्दृष्टिरङ्गेषु कर्तव्येत्याह—ऋतव इति । अस्ति[3] मासादीनां संवत्सरसंधित्वमस्ति च शरीरसंधित्वं पर्वणामतस्तेषु मासादिदृष्टिरित्याह—संधीति । युगसहस्राभ्यां प्राजापत्यमेकमहोरात्रम् । अयनाभ्यां दैवम् । पक्षाभ्यां पित्र्यम् । षष्टिघटिकाभिर्मानुषमिति भेदः । प्रतिष्ठाशब्दस्य पादविषयत्वं व्युत्पादयति—प्रतितिष्ठतीति । पादेष्वहोरात्रदृष्टिसिद्ध्यर्थं युक्तिमुपपादयति—अहोरात्रैरिति । अस्थिषु नक्षत्रदृष्टौ हेतुमाह—शुक्लत्वेति । नभःशब्देनान्तरिक्षं किमिति न गृह्यते मुख्ये सत्युपचारायोगादित्याशङ्क्य पुनरुक्तिं[6] परिहर्तुमित्याह—अन्तरिक्षस्येति । उदकं सिञ्चन्ति मेघा मांसानि रुधिरमतः सेक्तृत्वसामान्यान्मांसेषु मेघदृष्टिरित्याह—उदकेति ।

ऊवध्यमुदरस्थमर्धजीर्णमशनं सिकता[7] विश्लिष्टावयवत्वसामान्यात् । सिन्धवः स्यन्दनसामान्यान्नद्यो गुदा नाड्यो बहुवचनाच्च । यकृच्च

१ ण. °स्तत्कथं । २ क. न. °श्वस्य पा° । ङ. °श्वस्तु पा° । ३ ख. °स्ति हि मा° । ४ क. °यकृत्वं । ५ क. ख. ण. °द्वयर्थमुक्तम्° । ६ घ. ण. सेक्तृत्व° । ७ च. छ. °ता वालुका वि° । ८ क. ख. ग. घ. ङ. च. छ. वसा ।

क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ। क्लोमान इति नित्यं बहुवचनमेकस्मिन्नेव। पर्वताः काठिन्यादुच्छ्रितत्वाच्च। ओषधयश्च क्षुद्राः स्थावरा वनस्पतयो महान्तो लोमानि केशाश्च यथासंभवम्। उद्यन्नुद्गच्छन्भवति सविताऽऽमध्याह्नादश्वस्य पूर्वार्धो नाभेरूर्ध्वमित्यर्थः। निम्लोचन्नस्तं यन्नामध्याह्नाज्जघनार्धोऽपरार्धः पूर्वापरत्वसाधर्म्यात्। यद्विजृम्भते गात्राणि विनामयति विक्षिपति तद्विद्योतते विद्योतनं मुखघन[2]विदारणसामान्यात्। यद्विधूनुते[3] गात्राणि कम्पयति तत्स्तनयति गर्जनशब्दसामान्यात्। यन्मेहति मूत्रं करोत्यश्वस्तद्वर्षति वर्षणं तत्सेचनसामान्यात्। वागेव शब्द एवास्याश्वस्य वागिति नात्र कल्पनेत्यर्थः ॥ १ ॥

अश्वजठरविपरिवर्तिन्यर्धजीर्णे सिकतादृष्टौ हेतुमाह[4]—विश्लिष्टेति। किमिति गुदशब्देन पायुरेव न गृह्यते शिराग्रहणे हि मुख्यार्थातिक्रमः स्यात्तत्राऽऽह—बहुवचनाच्चेति। चकारोऽवधारणार्थः। यद्यपि बहूक्त्या शिराभ्योऽर्थान्तरमपि गुदशब्दमर्हति तथाऽपि स्यन्दनसादृश्यात्तास्वेव सिन्धुदृष्टिरिति तासामिह ग्रहणमिति भावः। कुतो मांसखण्डयोर्द्वित्वमेकत्र बहुवचनाद्बहुत्वप्रतीतेरित्याशङ्क्य दारा इतिवद्बहूक्तेर्गतिमाह—क्लोमान इति। तयोः पर्वतदृष्टौ हेतुद्वयमाह—काठिन्यादित्यादिना। क्षुद्रत्वसाधर्म्यादोषधिदृष्टिर्लोमसु महत्त्वसामान्याद्वनस्पति[5]दृष्टिश्चाश्वकेशेषु कर्तव्येत्याह—यथासंभवमिति। पूर्वसामान्यान्मध्याह्नात्प्रागवस्थादित्यदृष्टिरश्वस्य नाभेरूर्ध्वभागे कर्तव्येत्याह—उद्यन्नित्यादिना। अपरत्वसादृश्यादश्वस्य नाभेरपरार्धे[6] मध्याह्नादनन्तरभाव्यादित्यदृष्टिः कार्येत्याह—निम्लोचन्नित्यादिना। विजृम्भत इत्यादौ प्रत्ययार्थो न विवक्षितः। विजृम्भणं मुखं विदारयति विद्योतनं[7] पुनर्मेघमतो विद्योतनदृष्टिर्जृम्भणे कर्तव्येत्याह—मुखेति। स्तनयतीति स्तनितमुच्यते तद्दृष्टिर्गात्रकम्पे कर्तव्येत्यत्र हेतुमाह—गर्जनेति। मूत्रकरणे वर्षणदृष्टौ कारणमाह—सेचनेति। अश्वस्य हेषितशब्दे नास्त्यारोपणमित्यतो न सादृश्यं वक्तव्यमित्याह—नात्रेति ॥ १ ॥

अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे
समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत
तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानाव-

१ ग. घ. ङ. छ. ज. °क्षुद्रस्था°। २ घ. च. °नयोर्विदा°। ३ छ. °द्विधुनु°। ४ घ. ञ. ण. हेतुः—वि°। ५ घ. ञ. °ष्टिरश्व°। ६ क. ख. °रार्धभागे म°। ७ घ. मुखविदारणं विद्यो°। ८ क. ख. घ. ण. °विदारजम°।

भितः संबभूवतुः। हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥

इति प्रथमाध्यायस्य प्रथमं ब्राह्मणं समाप्तम् ॥ १ ॥

अहर्वा इति सौवर्णराजतौ महिमाख्यौ ग्रहावश्वस्याग्रतः पृष्ठतश्च स्थाप्येते तद्विषयमिदं दर्शनम्। अहः सौवर्णो ग्रहो दीप्तिसामान्याद्धि। अहरश्वं पुरस्तान्महिमाऽन्वजायतेति कथम्। अश्वस्य प्रजापतित्वात्। प्रजापतिर्ह्यादित्यादिलक्षणोऽह्ना लक्ष्यते। अश्वं लक्षयित्वाऽजायत सौवर्णो महिमा ग्रहो वृक्षमनु विद्योतते विद्युदिति यद्वत्। तस्य ग्रहस्य पूर्वे पूर्वः समुद्रे समुद्रो योनिर्विभक्तिव्यत्ययेन। योनिरित्यासादनस्थानम्। तथा रात्री राजतो ग्रहो वर्णसामान्याज्जघन्यत्वसामान्याद्वा। एनमश्वं पश्चात्पृष्ठतो महिमाऽन्वजायत तस्यापरे समुद्रे योनिः। महिमा महत्त्वात्। अश्वस्य हि विभूतिरेषा यत्सौवर्णो राजतश्च ग्रहावुभयतः स्थाप्येते। तावेतौ वै महिमानौ महिमाख्यौ ग्रहावश्वमभितः संबभूवतुरुक्तलक्षणावेव संभूतौ। इत्थमसावश्वो महत्त्वयुक्त इति पुनर्वचनं स्तुत्यर्थम्।

अश्वावयवेषु कालादिदृष्टीर्विधायाश्वं प्रजापतिरूपं विवक्षित्वा कण्डिकान्तरं गृहीत्वा तात्पर्यमाह—अहरित्यादिना। ग्रहौ हवनीयद्रव्याधारौ पात्रविशेषावग्रतः पृष्ठतश्चेति संज्ञपनात्प्रागूर्ध्वं चेति यावत्। प्रसिद्धा तावदह्नि दीप्तिः सौवर्णे च ग्रहे साऽस्त्यतस्तस्मिन्नहर्दृष्टिरिति दर्शनं विभजते—अहरिति। अश्वसंज्ञपनात्पूर्वं यो महिमाख्यो ग्रहः स्थाप्यते स चेदहर्दृष्ट्योपास्यते कथं सोऽश्वमन्वजायतेति पश्चादश्वस्य तज्जन्मवाचोयुक्तिरिति शङ्कते—अहरश्वमिति। नायं पश्चादर्थोऽनुशब्दः किंतु लक्षणार्थः। तथा चाश्वस्य प्रजापतिरूपत्वात्तं लक्षयित्वा ग्रहस्य यथोक्तस्य प्रवृत्तेरुपदेशादश्वमन्वजायतेत्यविरुद्धमिति परिहरति—अश्वस्येति। तदेव स्फुटयति—प्रजापतिरिति। काललोकदेवतात्मा प्रजापतिरश्वात्मना दृश्यमानोऽत्राहर्दृष्ट्या दृष्टेन ग्रहेण लक्ष्यते। तथा चाश्वमन्वजायतेति श्रुतिरविरुद्धेत्यर्थः। अनुशब्दो न पश्चाद्वाचीत्यत्र दृष्टान्तमाह—वृक्षमिति। यदा वृक्षं लक्षयित्वा तस्याग्रे विद्युद्विद्योतते तदा वृक्षमनु विद्यो-

---

१ क. ग. घ ङ. ञ. झ. °त वृ°। २ ङ. झ. योनिर्मैवयोनित्वाद्विभ°। ३ ग. ङ. च. छ. झ. °न्यसा°। ४ घ. ग. ब. च छ. ञ. झ. °तोऽन्व°। ५ क. ख. °हस्त्वम्। अ°। ६ च. °तः पुरतः पृष्ठतः सं°।

तते सेति प्रयुज्यते । तथाऽप्यनुशब्दो न पश्चादर्थ इत्यर्थः । यत्र च स्थाने ग्रहः स्थाप्यते तत्पूर्वसमुद्रदृष्ट्या ध्येयमित्याह—तस्येति । पूर्वत्वमत्र सादृश्यम् । कथं सप्तमी प्रथमार्थे योज्यते छन्दस्यर्थानुसारेण व्यत्ययसंभवादित्याह—विभक्तीति । यथा सौवर्णे ग्रहेऽहर्दृष्टिरुपदिष्टा तथा राजते ग्रहे रात्रिदृष्टिः कर्तव्येत्याह—तथेति । अस्ति हि चन्द्रातपवत्त्वाद्रात्रेः शौक्ल्यमस्ति च राजतस्य ग्रहस्य तद्युक्तं तत्र रात्रिदर्शनमित्याह—वर्णेति । रजतं सुवर्णाज्जघन्यमह्नश्च रात्रिरतो वा सादृश्यात्तत्र रात्रिदृष्टिरित्याह—जघन्येति । प्रजापतिरूपं प्रकृतमश्वं लक्षयित्वा तत्संज्ञपनात्पश्चादस्य प्रवृत्तिं दर्शयति—एनमिति । तदासादनस्थाने पश्चिमसमुद्रदृष्टिर्विधेयेत्याह—तस्येति । कथमेतौ ग्रहौ महिमाख्यावुक्तौ महत्त्वोपेतत्वादित्याह—महिमेति । अथाश्वविषयं दर्शनमादिश्य ग्रहविषयं तदादिशतो वाक्यभेदः स्यादित्याह—अश्वस्येति । किमत्र नियामकमित्याशङ्क्य पुनरुक्तिरिति मत्वाऽऽह—तावित्यादिना । वैशब्दार्थकथनम्[1]—एवेति ।

तथा च हयो भूत्वेत्यादि स्तुत्यर्थमेव । हयो हिनोतेर्गतिकर्मणो विशिष्टगतिरित्यर्थः । जातिविशेषो वा । देवानवहद्देवत्वमगमयत्प्रजापतित्वाद्देवानां वा[2] वोढाऽभवत् । ननु निन्[3]दैव वाहनत्वम् । नैष दोषः । वाहनत्वं स्वाभाविकमश्वस्य स्वाभाविकत्वाद्[4]दुच्छ्रायप्राप्तिर्देवादिसंबन्धोऽश्वस्येति स्तुतिरेवैषा । तथा वाज्यादयो जातिविशेषाः । वाजी भूत्वा गन्धर्वानवहदित्यनुषङ्गः । तथाऽर्वा भूत्वाऽसुरान् । अश्वो[5] भूत्वा मनुष्यान् । समुद्र एवेति परमात्मा बन्धुर्बन्धनं बध्यतेऽस्मिन्निति । समुद्रो योनिः कारणमुत्पत्तिं प्रति । एवमसौ शुद्धयोनिः शुद्धस्थितिरिति स्तूयते "अप्सुयोनिर्वा अश्वः" इति श्रुतेः । प्रसिद्ध एव वा समुद्रो योनिः ॥ २ ॥

इति प्रथमाध्यायस्य प्रथमं ब्राह्मणम् ॥ १ ॥

---

वाक्यशेषोऽप्यत्रानुगुणो भवतीत्याह—तथा चेति । हयशब्दनिष्पत्तिपुरःसरं तदर्थमाह—हय इति । वाज्यादिशब्दानां जातिविशेषवाचित्वादत्रापि तदेव ग्राह्यमिति पक्षान्तरमाह—जातीति । देवानां देवत्वप्रापकत्वं कथमस्येत्याशङ्क्याऽऽह—प्रजापतित्वादिति । अश्वं स्तोतुमारभ्य कल्पान्तरोक्त्या तन्निन्दावचनमनुचितमिति शङ्कते—नन्विति । उपक्रमविरोधो नास्तीति परिहरति—नेत्यादिना । समुत्पद्य

१ क. °ब्दार्थं कथयति—ए° । २ ख. च । ३ ग. °न्दैषा वा° । ४ ग. घ. ङ. च. छ. ञ. झ. °दुच्छ्रय° । ५ ख. घ. छ. ञ. झ. °ति च । स° ।

